# PREFACE

INDIAN grammarians have divided the Āryan languages and dialects that were current in the country broadly into Samskrt and Prākrt While Samskrt is the representative of the old Indo-Āryan languages, Prākrt is the name given to Mid Indo-Āryan languages and dialects, traces of which are found in the religious and secular literature of the period from 5th century B C to the 11 century A D., such as the Pāli Canon of the Hinayāna, the Prākrt Canon of the Jains, the lyrics, the epics and the plays and the Prākrt grammars These Prākrt languages are said to exhibit three different stages of growth : early, middle and later periods. To the early period belong the old Prākrt of the inscriptions (3rd century B.C to 2nd century A.D ), the Pāli of the Hinayāna and other Buddhist works like the Mahāvamśa and the Jātakas, the Prākrt of the old Jain Sutras and the Prākrt of the early plays of Aśvaghosa The Māhārāstri, the Sauraseni, the Māgadhi, etc., are found in the plays of later writers like Kālidāsa and in the Prākrt grammars, in the dialects of the early Jaina works, and the Paiśaci of the Brhatkatha. The Apabhramśa belongs to the later period.

Among these languages and dialects, Māhārāstri has been regarded as the Prākrt par excellence. Dandi, in his Kavyādarśa, has expressed the same opinion in the verse·

" महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः "

Almost all Prākrt grammarians give rules, at the outset, for Māhārāstri, their special rules for each of the other

But Namisādhu, the famous commentator of Rudrata's Kāvyālankara (II-12) gives a different explanation of the word Prākrta. He considers that the Prakrti or the basis of these languages and dialects is not Samskrt, but the natural language of the common people, free from the rules of grammar as distinguished from the language of the cultured or refined people. Or it is the language 'created of old' (प्राक् कृतं), the language in which Mahāvīra spoke and from which all others are derived It has taken different shape in different regions. It is the language of the people, from which the refined language Samskrt emerged, This explains why the Śāstrakāra spoke of Prākrt first.

"सकलजगज्जन्तूनां व्याकरणादिभिरनाहितसंस्कारः सहजो वचनव्यापारः प्रकृतिः। तत्र भवं सैव वा प्राकृतम्। 'आरिसवयणे सिद्धं देवाणं अद्धमागहा वाणी' इत्यादिवचनाद्वा प्राक् पूर्वं कृतंप्राक्कृतं बालमहिलादिसुबोधं सकलभाषानिबन्धनभूतं वचनमुच्यते। मेघनिर्मुक्तजलमिवैकस्वरूपं तदेव च देशविशेषात् संस्कारकरणाच्च समासादितविशेषं सत् संस्कृताद्युत्तरविभेदानाप्नोति। अत एव शास्त्रकृता प्राकृतमादौ निर्दिष्टं तदनु संस्कृतादीनि।"

No doubt, more than 95 per cent of the words in Prākrt are traceable to their Samskrt origin Yet there are words which are really relics of the language of the people Namisādhu's explanation,* therefore, has considerable plausibility. How then should Hemacandra's derivation 'प्रकृतेरागतं प्राकृतं' be understood? It might be that the Prākrt grammarians were not at all keen on tracing the origin of these languages but on bringing out a grammar of the vast literature in the languages which was before them They simply adopted the form and terminology of the Samskrt grammar since they were quite familiar

*His explanations are not accepted by later writers like Vāgbhata. They give a late origin to Samskrt, which is against the traditional view

technique, has some rules on Prākrt because he is interested in the Prākrt occurring in the dramatic treatises But the first systematic grammar on the Prākrt languages is the Prākrta Sutras of Vararuci-Kātyāyana in twelve chapters. Kātyāyana is the best representative of the Eastern school He is followed by Kramadisvara, Lankêśvara, Rāmatarkavāgîśa, and Mārkandêya. The oldest commentary on Prākrta Sutra of Kātyāyana is that by Bhāmaha It is known as Prākrtaprakāśa, also as Manôrama. To the Western school belongs the Prākrta Sutra of Vālmîki It has been commented on by Trivikrama, Lakshmidhara and Simharāja Hemacandra also follows Valmîki

A doubt has been raised regarding the authorship of the Sutras and the identification of Vālmîki with the author of the Rāmāyaṇa Laxmîdhara, in his commentary on the Sutras, ascribes the Sutras to Vālmîki. But the tippani or gloss in the printed edition of the Vrtti of Trivikrama ascribes them to Trivikrama himself. The latter view is untenable as Trivikrama himself in his Vṛtti on 2-1-46 states 'केचित्तु एकमेव सूत्रमाहुः' If the Sutras were by Trivikrama this Vrtti on the Sutra cannot be properly explained. Vālmîki should, therefore, be considered as the author of the Sutras. The question now arises whether the sage Vālmîki, author of the Rāmāyana was the author of these sutras. Mallikāmāruta and Śambhurahasya, no doubt, ascribe a Prākrt grammar to him, but there are no adequate proofs to assume the present work to be by him. It may be by a later writer of the same name

The Prākrtamanidîpa, also known as Prākrtamanidîpikā, a commentary on the Sutras of Vālmîki, is now published for the first time with a gloss by the editor, Sri T. T. Vidvan Srinivasagopalachar. The work is ascribed to Chinnabommabhûpa, one of the Vijayanagar vassal kings

॥ श्री ॥

॥ श्रीहयवदनपरब्रह्मणे नमः ॥

# टिप्पणीसहितस्य प्राकृतमणिदीपस्य प्रस्तावना.

यदुपज्ञमेव सकलं वाङ्मयमिन्धे समस्तभुवनेषु ।
जयतु श्रीहयवदनं वागीशाख्यं च तत्परं ब्रह्म ॥

अयि भोः पण्डितप्रकाण्डाः सुविदितमेवैतत्समेषां तत्रभवताम्, यत्किल धर्मार्थकाममोक्षाख्याश्चतुर्विधाः पुमर्था यथास्वाधिकारविशेषमभिलष्यन्ते मानवैरिति । ते च पुरुषार्था बहुविधवाङ्मयगुम्फितबहुप्रबन्धपरिचिन्तनेनाज्ञानान्धतमसमपाकृत्य संसाधनीया इत्यविवादम् । अत एव च तत्तादृशाज्ञानसंतमसविनाशने वाङ्मयाज्ज्योतिषो नान्यत्किञ्चन जागर्ति हि जगतीतल इत्यभिसंधायोक्तं महाकविवरेण्येन दण्डिना—

इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥

(काव्यादर्शे—१-४)

इति । तथा लोकव्यवहारस्सर्वोऽपि वागधीन एव । तदप्युक्तं तेनैव दण्डिना—

इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा ।
वाचामेव प्रसादेन लोकयात्रा प्रवर्तते ॥

(काव्यादर्शे—१ ३)

इति । अवाङ्मनसगोचरमहिम्नो वाङ्मयस्य परिशीलनादेव हि कर्तव्ये प्रवृत्तिरकर्तव्यान्निवृत्तिश्चोपपद्यते । तदिदं हि वाङ्मयं प्रभुसंमितं सुहृत्संमितं कान्तासंमितमिति त्रिधा विभजन्ते विपश्चितः । प्रभुसंमिताद्वेदात्सुहृत्संमितादितिहासपुराणादितश्चोपजायमानं कर्तव्यौन्मुख्यादिकं न तथा हृदयंगमं, यथा कान्तासंमितात्काव्यादित्यभिप्रेत्योक्तं विद्यानाथेन—

यद्वेदात्प्रभुसंमितादधिगतं शब्दप्रधानाच्चिरं
यच्चार्थप्रवणात्पुराणवचनादिष्टं सुहृत्संमितात् ।

इत्यभिधाय, पुनरपि तत्रैव ब्रह्मणा दैत्यसांत्वनावसरे—

भवतां देवतानां च शुभाशुभविकल्पकः।
कर्मभावान्वयापेक्षी नाट्यवेदो मया कृतः॥
नैकान्ततोऽत्र भवतां देवानां चापि भावनम्।
त्रैलोक्यस्यास्य सर्वस्य नाट्यभावानुकीर्तनम्॥
धर्मो धर्मप्रवृत्तानां कामाः कामार्थसेविनाम्।
निग्रहं दुर्विनीतानां मत्तानां दमनक्रिया॥
देवानामसुराणां च राज्ये लोकस्य चैव हि।
महर्षीणां च विज्ञेयं नाट्यं वृत्तान्तदर्शकम्॥
धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम्।
लोकोपदेशजननं नाट्यमेतद्भविष्यति॥

इत्यादिना भाषाद्वयमिश्रदृश्यकाव्योपयोगिनाट्यशास्त्रोपदेशप्रयोजनमभ्यधायि। तथाऽत्रैव प्राकृतमणिदीपवृत्त्युपोद्घातेऽपि—

सूक्ष्मार्थं ग्राहयितुं मन्दानपि नाटकं मृदूपायः।
तस्यापि जीवितमिदं प्राकृतमप्राकृतेन यन्मिश्रम्॥

इति संस्कृतप्राकृतभाषाद्वयमिश्रितदृश्यकाव्यप्रशंसनमकारि॥

### कतिचित्प्राकृतभाषामयप्रबन्धनिर्देशः.

इदं चैकस्मिन्नपि दृश्यकाव्ये षण्णामपि प्राकृतभाषाणां प्रायशो दर्शनाभिप्रायेणोक्तम्। नैतावता दृश्यकाव्यान्येव प्राकृतभाषाणां परमं स्थानमिति विज्ञायते। यतः किल स्तोत्रकाव्यादीन्यपि पृथक्पृथक् प्राकृतभाषासूपलभ्यन्ते। यथा—श्रीमद्वेदान्ताचार्य-जैनाचार्यादिभिः प्रणीता अच्युतशतक-कायस्थितिस्तोत्रादयः स्तोत्रप्रबन्धाः, शातवाहन-प्रवरसेन-वाक्पतिराजादिप्रणीता गाथासप्तशती-सेतुबन्ध-गौडवधादयः काव्यप्रबन्धाः, गणधरसुधर्मस्वाम्यादिकृता अनुयोगोत्तराध्ययनाचाराङ्गप्रज्ञापनासूत्रादयो जैनदर्शनसूत्रप्रबन्धाः, तद्व्याख्यारूपास्तथा कथारूपाश्च बहवः प्रबन्धाः प्राकृतभाषायामुपलभ्यन्ते। जैनमतानुयायिभिः प्रायशस्सर्वत्र प्राकृतभाषालक्षणलक्षिता क्वचित्क्वचिन्मागधीलक्षणलक्षिता अर्धमागधीभाषा च तदीयदार्शनिकग्रन्थेषु समादृता परिदृश्यते। एवमपभ्रंशभाषायां हरिभद्रसूरिविरचितं धूर्ताख्यानकाव्यं तथा जिनदत्तसूर्यादिप्रणीताः चर्चर्युपदेशरसायनकालस्वरूपकुलकाख्यापभ्रंशकाव्यत्रय्यादयः काव्यग्रन्थाश्च दृश्यन्ते। तथा पिशाचभाषायां गुणाढ्यनाम्ना कविना बृहत्कथाख्यो विस्तृतः कथाप्रबन्धः प्रणीत इति श्रूयते। अत एवोक्तं

दण्डिना काव्यादर्शे—

भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम् ।

(काव्यादर्शः १-३८)

इति ॥

## प्राकृतभाषाप्राशस्त्यम्.

प्राकृतभाषा च स्त्रीबालमन्दादिसुगमा सरला चेत्यभिप्रेत्य प्राकृतभाषायामेव जैनसिद्धान्तग्रन्था बहवः प्रणीता इति -

बालस्त्रीमन्दमूर्खाणां नृणां चारित्रकाङ्क्षिणाम् ।
अनुग्रहार्थं तत्त्वज्ञैः सिद्धान्तः प्राकृतः कृतः ॥

इति काव्यानुशासनटीकायां हेमचन्द्राचार्येणोक्तम् । तथा काव्यान्यपि प्राकृतभाषामयानि सुमधुराणि मनोज्ञानि सुकुमाराणि सुललितानि सर्वग्राह्याणि सर्वोपकारीणि सरसानि हृदयंगमानि चेति तद्भाषाविचक्षणैर्बहुभिरुद्घोषि । तथाहि—

अमअं पाइअकव्वं पढिउं सोउं च जे न जाणंति ।
कामस्स तत्ततत्तिं कुणंति ते कह न लज्जंति ॥

[छाया—अमृतं प्राकृतकाव्यं पठितुं श्रोतुं च ये न जानन्ति ।
कामस्य तत्त्वचिन्तां कुर्वन्ति ते कथं न लज्जन्ते ॥]

इत्यादिना गाथासप्तशत्यां शातवाहनेनोक्तम् । तथा—

प्रसीदन्तु च वाचस्ता यासां माधुर्यमुच्छ्रितम् ।
प्राकृतच्छद्मना चक्रे कात्यायनमहाकविः ॥
अहो तत्प्राकृतं हारि प्रियावक्त्रेन्दुसुन्दरम् ।
सूक्तयो यत्र राजन्ते सुधानिष्यन्दनिर्भराः ॥

इति प्राकृतमञ्जर्यां वररुचिपण्डितवर्येणोक्तम् । तथैव कर्पूरमञ्जर्याम्—

परुसो सक्कअबंधो पाइअबंधो वि होइ सुउमारो ।
पुरिसाणं महिलाणं जेत्तिअमिहंतरं तेत्तिअमिमाणम् ॥

[छाया—परुषस्संस्कृतबन्धः प्राकृतबन्धस्तु भवति सुकुमारः ।
पुरुषाणां महिलानां यावदिहान्तरं तावदनयोः ॥]

इति राजशेखरकविनोक्तम् । तथा—

पाइअकव्वुल्लावे पडिवअणं सक्कएण जो देइ ।
सो कुसुमसत्थरं पत्थरेण अबुहो विणासेइ ॥

[छाया—प्राकृतकाव्योल्लापे प्रतिवचनं संस्कृतेन यो ददाति।
स कुसुमस्रस्तरं प्रस्तरेणाबुधो विनाशयति ॥]

इति जयवल्लभकविनोक्तम्। तथाऽतिशयोक्तया बहुशः प्रशंसति प्राकृतीं भाषां गौडवधे वाक्पतिराजोऽपि—

उम्मिल्लइ लाअण्णं पाइअच्छाआए सक्कअवआणम्।
सक्कअसक्कारुक्करिसणेण पाअअस्स वि पहावो ॥
णवमत्थदंसणं संनिवेससिसिराओ बंधरिद्धीओ।
अविरलमिणमो आभुवणबंधमिह णवर पअअम्मि ॥
सअलाओ इमं वाआ विसंति एत्तोअ णेंति वाआओ।
एंति समुद्दं चिअ णेंति साअराओ च्चिअ जलाइं ॥

[छाया—उन्मील्यते लावण्यं प्राकृतच्छायया संस्कृतपदानाम्।
संस्कृतसंस्कारोत्कर्षणेन प्राकृतस्यापि प्रभावः ॥
नवमर्थदर्शनं संनिवेशशिशिरा बन्धर्धयः।
अविरलमेतदा भुवनबन्धमिह केवलं प्राकृते।
सकला इदं वाचो विशन्ति इतश्च निर्यान्ति वाचः।
आयान्ति समुद्रमेव निर्यान्ति सागरादेव जलानि ॥]

इति। तथा—

सक्कअकव्वस्सत्थं जेण न याणंति मन्दबुद्धीओ।
सव्वाण वि सुहबोहं तेणेमं पाइअं कइअं ॥
गूढत्थदेसिरहिअं सुललिअवण्णेहिं विरइअं रम्मं।
पाइअकव्वं लोओ कस्स न हिअअं सुहावेइ ॥
परउवआरपरेणं सा भासा होइ एत्थ भणिअव्वा।
जाअइ जीए विबोहो सव्वाण वि बालमा(आ)ईणम् ॥

[छाया—संस्कृतकाव्यस्यार्थं येन न जानन्ति मन्दबुद्धयः।
सर्वेषापि सुखबोधं तेनेदं प्राकृतं रचितम् ॥
गूढार्थदेशरहितं सुललितवर्णैर्विरचितं रम्यम्।
प्राकृतकाव्यं लोके कस्य न हृदयं सुखयति ॥
परोपकारपरेण सा भाषा भवत्यत्र भणितव्या।
जायते यया विबोधः सर्वेषामपि बालकादीनाम् ॥

इति पञ्चमीमाहात्म्ये महेश्वरसूरिणोक्तम् ॥ तथैव—

पाइअकव्वम्मि रसो जो जाअइ तहव छेअभणिएहिं।

उअअस्स अ वासिअसीअलस्स तित्तिं न वच्छामो ॥
ललिए महुरक्खरए जुवईजणवल्लहे ससिंगारे ।
संते पाइअकव्वे को सक्कइ सक्कअं पढिउं ॥
[छाया—प्राकृतकाव्ये रसो यो जायते तथा च च्छेकभणितैः ।
उदकस्य च वासितशीतलस्य तृप्तिं न व्रजामः ॥
ललिते मधुराक्षरे युवतीजनवल्लभे सशृङ्गारे ।
सति प्राकृतकाव्ये कः शक्नोति संस्कृतं पठितुम् ॥]
इति जयवल्लभेनापि बहुधा प्राकृतभाषायाः प्रशंसनमकारि ॥
तथा वाल्मीकीयप्राकृतशब्दानुशासनसूत्रवृत्तौ त्रिविक्रमदेवेनापि—
अनल्पार्थसुखोच्चारशब्दः साहित्यजीवितम् ।
स च प्राकृतमेवेति मतं सूक्तानुवर्तिनाम् ॥
इत्यभ्यधायि । इत्थमेवान्यैरपि बहुभिः प्राकृतभाषाविचक्षणैः प्राकृतभाषायाः प्रशंसनमकारीति विस्तरभिया विरम्यते ॥

## प्राकृतसूत्रतद्वृत्त्यादीनां निर्देशः.

संस्कृतप्राकृतभेदेन द्विधा विभक्ते सति वाङ्मये तत्र संस्कृतभाषामधिकृत्य भगवत्पाणिन्यादिभिर्महावैयाकरणैर्व्याकरणशास्त्रमारब्धम् । प्राकृतभाषां चाधिकृत्य श्रीकात्यायनवाल्मीकिहेमचन्द्रमार्कण्डेयचण्डेश्वरादिभिः प्राकृतव्याकरणशास्त्रं प्राणायि । तेषु च सर्वेषु प्राकृतवैयाकरणेष्वद्य कात्यायन एव प्रथमाचार्यपदवीं प्रविष्ट इत्युपलभ्यमानतत्तद्ग्रन्थपरिशीलनादवगम्यते । कात्यायनप्रणीतसूत्रजालस्य प्राक्तनेन भामहेन प्रणीता मनोरमाख्या वृत्तिरुपलभ्यते । तथा तस्यैव सूत्रजालस्य कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-श्रीमद्वेदान्ताचार्येणापि प्रणीता प्राकृतविशदसंग्रहाख्या वृत्तिर्दृश्यते ॥

कात्यायनीयसूत्रजालापेक्षया विस्तृतस्य श्रीमद्वाल्मीकिविरचितस्याध्यायत्रितयपरिमितस्यास्य प्राकृतव्याकरणशास्त्रस्य तु त्रिविक्रमदेवविरचिता वृत्तिस्तथा श्रीलक्ष्मीधरसूरिणा प्रणीता षड्भाषाचन्द्रिकाख्या व्याख्या चोपलभ्यते । तथाऽन्या अप्यस्य वृत्तयो वार्तिकार्णवभाष्याद्या व्याख्यारूपा आसन्निति ज्ञायते । तदेतदुक्तमत्रैव वृत्तावुपोद्घाते—

ये त्रिविक्रमदेवेन हेमचन्द्रेण चेरिताः ।

लक्ष्मीधरेण च ग्रन्था भोजेन च महीक्षिता ।
ये पुष्पवननाथेन ये वा वाररुचा अपि ।
वार्तिकार्णवभाष्याद्या अप्पयज्वकृताश्च ये ॥

इति ॥

## प्राकृतशब्दार्थः, प्राकृतस्य संस्कृतमूलकत्वं च.

अथेदानीं किंचित्परिशीलयामः, को नाम प्राकृतशब्दार्थ इति । अत्र केचित्स्वतन्त्रा एवं मन्यन्ते—प्रकृत्याः स्वभावात् आगतं प्राकृतम्, ततश्च वैयाकरणैस्साधितं संस्कृतमित्यभिधीयते। तस्मान्न संस्कृतमूलकं प्राकृतम्, प्रत्युत प्राकृतमूलकमेव संस्कृतमिति । अत्रेदं किञ्चिद्विचारयामः प्रकृतिर्नाम स्वभावः किंसंबन्ध्यभिप्रेतः । यदि सर्वव्यवहारप्रवर्तकपरमेश्वरसंबन्धी तर्हि तस्य वैरूप्ये प्रमाणाभावात्तद्भाषाभेदो नोपपद्येत । यदि च संस्कृतव्यवहाराशक्ततत्तद्देशभवजनसंबन्धी स्वभाव इष्येत तर्हि तदस्माकमीप्सितमेव । तथा चोक्तं भर्तृहरिणा—

दैवी वाग्व्यवकीर्णेयमशक्तैरभिधातृभिः । इति ।
अम्बाम्बेति यथा बालश्शिक्षमाणः प्रभाषते । इति च ।

तथा भगवता पतञ्जलिनाऽपि भाषितम् 'यथा गौरित्यस्य गावी गोणी गोता गोपोतलिकेत्येवमादयोऽपभ्रंशाः' इति । अत्रापभ्रंशा इत्युक्तिस्तु संस्कृतेतरप्राकृतभाषाभिप्राया । अत एव दण्डिना—

शास्त्रेषु संस्कृतादन्यदपभ्रंशतयोदितम् ।
(काव्यादर्शे—१-३६)

इत्युक्तं च ॥

एवं च संस्कृतभाषाव्यवहाराशक्तजनसमुदीरितसंस्कृतानुकारिभाषायाः प्राकृतत्वात्संस्कृतमूलकमेव प्राकृतमिति निर्धार्यते ॥

यत्तूक्तम्—

प्राकृतसंस्कृतमागधपिशाचभाषाश्च शूरसेनी च ।
षष्ठोऽत्र भूरिभेदो देशविशेषादपभ्रंशः ॥

इति रुद्रटीयकाव्यालङ्कारश्लोकटीकायां जिनमतानुयायिना नमिसाधुना "सकलजगज्जन्तूनां व्याकरणादिभिरनाहितसंस्कारस्सहजो वचनव्यापारः प्रकृतिः ; तत्र भवं सैव वा प्राकृतम् । 'आरिसवअणे सिद्धं देवाणं अद्धमागहा वाणी' इत्यादिवचनाद्वा प्राक्पूर्वं कृतं प्राक्कृतं बालमहिलादिसुबोधं सकलभाषानिबन्धनभूतं वचनमुच्यते । मेघनिर्मुक्तजलमिवैक

स्वरूपं तदेव च देशविशेषात्संस्कारकरणाच्च समासादितविशेषं सत्संस्कृताद्युत्तरविभेदानाप्नोति। अत एव शास्त्रकृता प्राकृतमादौ निर्दिष्टम्। तदनु संस्कृतादीनि। पाणिन्यादिव्याकरणोदितशब्दलक्षणेन संस्करणात्संस्कृतमुच्यते।" इति, तत्प्रायशो जैनग्रन्थानां प्राकृतभाषायां दर्शनात्प्राकृतभाषाप्रशंसनाय प्रौढिवादेनोक्तमित्येव मन्यामहे। यदि तदुक्तरीत्या व्याकरणादिभिरनाहितसंस्कारकभाषाणां प्राकृतत्वं स्यात्, तर्हि कात्यायनवाल्मीकिहेमचन्द्रादिव्याकरणाहितसंस्कारवत्त्वान्मागध्यादीनामपि प्राकृतत्वं न स्यात्। उक्तं चानेनैव नमिसाधुनोत्तरत्र मागध्यादीनामपि प्राकृतत्वम्। प्रत्युत व्याकरणाद्याहितसंस्कारकत्वात्तासामपि संस्कृतत्वमेव च स्यात्। न हीदं कस्यापि संमतम्। किं चात्र मूलभूतरुद्रटीयश्लोके एककारकप्राकृतशब्दस्यैवोपलम्भात्सर्वैरपि ग्रान्थिकैस्तथैवोक्तत्वाच्च प्राकृतस्य प्राचीनतासमर्थनार्थं प्राक्कृतमित्यानुपूर्वीमभ्युपेत्य प्राक् कृतं प्राक्कृतमिति व्युत्पादनं च स्वकपोलकल्पनामूलमेव। तथा रुद्रटेन प्रथमं प्राकृतशब्दग्रहणं च न प्राकृतभाषायाः संस्कृतमूलत्वाभिप्रायकम्। आर्यावृत्तानुगुण्येन तथोक्त्या केवलभाषानामनिर्देशपरमेव तदिति मन्यामहे। अत एव भाषाविभागप्रदर्शनावसरे—

संस्कृतं प्राकृतं चैतदपभ्रंश इति त्रिधा। (भा-अलं-१-१६)
संस्कृतं प्राकृतं तस्यापभ्रंशो भूतभाषितम्।
इति भाषाश्चतस्रोऽपि यान्ति काव्यस्य कायताम्॥
(वाग्भटालं.—२-१)

तदेतद्वाङ्मयं भूयः संस्कृतं प्राकृतं तथा।
अपभ्रंशश्च मिश्रं चेत्याहुरार्याश्चतुर्विधम्॥ (दण्डिकाव्या.—१-३२)

इत्यादिना चिरंतनैर्भामहवाग्भटदण्ड्यादिभिस्सर्वैरपि संस्कृतभाषैव प्रथमं परिगणिता दृश्यते॥

तथा 'पाणिन्यादिव्याकरणोदितशब्दलक्षणेन संस्करणात्संस्कृतमित्युच्यते' इत्युक्तिरपि न प्रामाणिकपदवीमवगाहते। पाणिन्यादिव्याकरणशास्त्राणि हि नापूर्वान् शब्दान् साधून् कल्पयन्ति। न वा प्रकारान्तरस्थितान् अन्यथयन्ति, किंत्वनादिपरंपरासिद्धानामेव प्रयुक्तानां साधुशब्दानामवगमाय प्रकृतिप्रत्ययादिकल्पनारूपेण लघुनोपायेनान्वाख्यानार्थं प्रावर्तन्त। अत एव हि भगवता वार्तिककृता 'सिद्धे शब्दार्थसंबन्धे लोकतोऽर्थप्रयुक्ते शास्त्रेण धर्मनियमः क्रियते यथा वैदिकलौकिकेषु' इति

न्यगादि। अभाषि च भगवता पतञ्जलिना 'यथालक्षणमप्रयुक्ते' (पा सू भा १-१-२४) इति। अत्रैतद्भाष्यविवरणकृता कैयटेनापि यथालक्षणमित्यत्र पदार्थानतिवृत्तावव्ययीभावाभ्युपगमे प्रयुक्तेष्वपि लक्षणानतिक्रमसत्त्वाद् प्रयुक्त इति वाक्यशेषस्याव्यावर्तकता स्यादिति तत्परिहाराय यथालक्षणमित्यत्र योग्यतार्थकयथाशब्देन अलक्षणपदस्याव्ययीभावसमासतामभिप्रेत्य अप्रयुक्ते लक्षणाभावस्यैव योग्यतेत्यभिसंधाय 'नैव वा लक्षणमप्रयुक्ते प्रवर्तते प्रयुक्तानामेवान्वाख्यानात्' इति व्याख्यातम्। तथा च मूलभूतप्राकृतभाषानुपूर्व्याः पाणिन्यादिकृतव्याकरणशास्त्रेण संस्कारात्संस्कृता भाषेति दुर्वचम्। संस्कृतभाषाया अनादिनिधनवेदसिद्धतया देवभाषात्वाच्च युक्तं तन्मूलकत्वमेवेतरासां सर्वासामपि भाषाणामिति निर्धारयामः। अत एव—

संस्कृतं स्वर्गिणां भाषा शब्दशास्त्रेषु निश्चिता।
प्राकृतं तज्जतत्तुल्यदेश्यादिकमनेकधा॥ (वाग्भटालं—२-२)

इति जिनमतानुयायिनैव वाग्भटेनाप्युक्तम्। अत्र 'देवानां भाषा संस्कृतं भवति। किंविशिष्टा? शब्दशास्त्रेषु व्याकरणेषु निश्चिता सम्यग्व्युत्पत्त्या निर्णीता। प्रकृतेः संस्कृतादागतं प्राकृतं अनेकधा अनेकप्रकारैर्भवति' इत्येतट्टीकायां सिंहदेवगणिनाऽप्युक्तम्। तथा काव्यादर्शे—

संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः।
तद्भवस्तत्समो देशीत्यनेकः प्राकृतक्रमः॥

इति दण्डिनाऽप्यभ्यधायि॥

प्राकृतस्य संस्कृतमूलकत्वादेव हि कात्यायनेनापि शौरसेनीनिरूपणावसरे तत्प्रकृतित्वेन संस्कृतं ग्राह्यमिति 'प्रकृतिस्संस्कृतम्' इति च सूत्रितम्। तथैवैतद्वाल्मीकीयप्राकृतसूत्रजालान्तेऽपि 'शेषं संस्कृतवत्' इति सूत्रं दृश्यते। यदि संस्कृतमूलकत्वं प्राकृतस्य न स्यात्तदा संस्कृतवत्प्रक्रियातिदेशो नोपपद्येत। सूत्रेषु सर्वत्र संस्कृतसिद्धशब्दानुपादाय प्रक्रियाविशेषविधानमनुपपन्नमेव च स्यात्। अत एव हेमचन्द्रोऽप्यध्यायसप्तकेन संस्कृतभाषाव्याकरणसूत्राणि प्रणीय ततोऽन्तिमेऽष्टमेऽध्याये आदौ 'अथ प्राकृतम्' इति सूत्रयित्वा स्वयमेव तद्वृत्तौ 'प्रकृतिस्संस्कृतं, तत्र भवं तत आगतं वा प्राकृतम्' इति सुस्पष्टमेव व्याचख्यौ। तथैतद्वाल्मीकीयवृत्तौ त्रिविक्रमदेवेनापि—

प्रकृतेस्संस्कृतात्साध्यमानात्सिद्धाच्च यद्भवेत्।
प्राकृतस्यास्य लक्ष्यानुरोधिलक्ष्म प्रवक्ष्महे॥

इत्युक्तम्। तथा प्राकृतसर्वस्वकृता मार्कण्डेयेनापि 'प्रकृतिस्संस्कृतं, तत्र भव प्राकृतमित्युच्यते' इत्युक्तम्। तस्मात्प्रकृतिः संस्कृतम्, तत आगतं प्राकृतमित्येव युक्तं मन्यामहे ॥

## प्राकृतभाषाविभागः

इदं च प्राकृतं कात्यायनमते माहाराष्ट्री पैशाची मागधी शौरसेनी इति चतुर्धा विभज्यते। तत्र पैशाची मागधी च शौरसेनीविकृतित्वेनाभिधीयेते, 'प्रकृतिश्शौरसेनी' इति पैशाचीनिरूपणावसरे मागधीनिरूपणावसरे च सूत्रितत्वात्। शौरसेनी तु संस्कृतविकृतिः प्राकृतवत्, शौरसेनीनिरूपणावसरे 'प्रकृतिस्संस्कृतम्' इति सूत्रदर्शनात्। माहाराष्ट्र्याः प्राकृतत्वेनापि व्यवहारो दृश्यते। अत एव कात्यायनप्राकृतसूत्रजालान्ते 'शेषं महाराष्ट्रीवत' इति सूत्रे 'महाराष्ट्रीपदेनात्र प्राकृतग्रहणं बोध्यम्। इति तत्रत्यमनोरमाख्यवृत्तिग्रन्थश्चोपपद्यते। दण्डिनाऽप्युक्तं—

महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः।

इति। अत्र नाटकेषूत्तमपात्रप्रयोज्यत्वान्माहाराष्ट्र्याख्यप्राकृतस्य प्रकृष्टत्वोक्तिः। अत एव हेमचन्द्रेणेदं प्राकृतमार्षत्वेनोत्कीर्तितम्। संस्कृतेतरभाषासामान्ये प्रवर्तमानः प्राकृतशब्दस्तु साक्षात्परंपरया वा संस्कृतरूपप्रकृतिसमुत्पत्तिरूपप्रवृत्तिनिमित्तेन प्रवृत्तस्स्यादित्यभ्युपेयम्। संस्कृतेतरभाषावान्तरभूतप्राकृतमेव माहाराष्ट्रीपदेन क्वचिदर्धमागधीपदेनापि व्यपदिश्यत इति ज्ञायते ॥

श्रीवाल्मीकीयप्राकृतशब्दानुशासनतद्व्याख्यापरिशीलनायां तु संस्कृतेतरभाषायाः प्राकृतशौरसेनीमागधीपैशाचीचूलिकापैशाच्यपभ्रंशभेदेन षोढा विभाग इत्यवसीयते ॥

हेमचन्द्राशयपरिशीलनायामप्येवं प्रतिभाति—भाषा द्विविधा सांस्कृती प्राकृती चेति। तत्र प्राकृती आर्षी शौरसेनी मागधी पैशाची चूलिकापैशाची अपभ्रंश इति षड्विधेति। तथाहि तेनैवादौ अध्यायसप्तकपरिमितेन सूत्रजालेन संस्कृतभाषाप्रक्रियां प्रायः पाणिनीयव्याकरणानुरोधेनैव प्रकाश्य ततः श्रीवाल्मीकीयप्राकृतशब्दानुशासनमेव प्रायशोऽनुरुध्य प्राकृतभाषाप्रक्रियाप्रकाशनपरेऽन्तिमेऽष्टमेऽध्याये आदौ 'अथ प्राकृतम्' (हे. प्रा. शब्दा ८-१-१) इति सूत्रयित्वा ततः 'आर्षम्' (हे. प्रा. शब्दा. ८-१-३) इत्यारभ्य 'धातवोऽर्थान्तरेऽपि' (हे प्रा शब्दा. ८-४-२५८) इत्यन्तेन सूत्रजालेन आर्ष(प्राकृत)प्रक्रिया

प्रदर्शिता। ततः 'तो दोऽनादौ शौरसेन्यामयुक्तस्य' इत्यारभ्य षड्विंशत्या सूत्रैः शौरसेनीप्रक्रियां निरूप्य तत्रानुक्तस्थले 'शेषं प्राकृतवत्' (हे. प्रा. शब्दा ८-४-२८६) इत्यनेन पूर्वोक्तार्षप्राकृतप्रक्रियातिदेशः कृतः। तदनन्तरं 'अत एत्सौ पुंसि मागध्याम्' (हे. प्रा शब्दा ८-४-२८७) इत्यारभ्य पञ्चदशभिस्सूत्रैः मागधीभाषां व्याकृत्य तत्रानुक्तस्थले 'शेषं शौरसेनीवत्' (हे प्रा शब्दा ८-४-३०२) इत्यनेन शौरसेनीप्रक्रिया ऽतिदिष्टा। पश्चात् 'ज्ञो ञः पैशाच्याम्' (हे प्रा. शब्दा ८-४-३०३) इत्यारभ्य विंशत्या सूत्रैः पैशाचीं व्युत्पाद्य तत्रानुक्तस्थले 'शेषं शौरसेनीवत्' (हे प्रा शब्दा ८-४-३२४)इत्यनेन शौरसेनीप्रक्रियातिदेशः सूचितः। तदनु 'चूलिकापैशाचिके तृतीयतुर्ययोराद्यद्वितीयौ' (हे. प्रा. शब्दा ८-४-३२५) इत्यारभ्य त्रिभिस्सूत्रैश्चूलिकापैशाची-भाषाप्रक्रियां संगृह्य तत्रानुक्तस्थले 'शेषं प्राग्वत्' (हे प्रा. शब्दा ८-४-३२८) इत्यनेन पैशाचीरीतिरनुशिष्यते। तदुपरि 'स्वराणां प्रायोऽपभ्रंशे' (हे. प्रा. शब्दा ८-४-३२९) इत्यारभ्य ११७ सूत्रैरपभ्रंशभाषा-प्रक्रियां निरूप्य तत्राप्यनुक्तस्थले शौरसेनीप्रक्रियामेवातिदिश्यान्ते षट्-स्वपि भाषास्वनुक्तस्थले संस्कृतवत्प्रक्रियातिदेशेनोपसंहृतम्। इत्थं च श्रीवाल्मीकिहेमचन्द्रयोः प्राकृतभाषाव्युत्पादनविषये प्रायशस्समान एवाशय इति ज्ञायते ॥

प्राकृतसर्वस्वकृन्मार्कण्डेयमते तु—प्राकृतस्य भाषाविभाषापभ्रंश-पैशाचीभेदेन चतुर्धा विभागः, तत्र भाषाया माहाराष्ट्रीशौरसेनी प्राच्यावन्तीमागधीभेदेन पञ्चधा विभागः, विभाषायाः शाकारी-चाण्डालीशावर्याभीरिकीशाकीभेदेन पञ्चधा विभागः, अपभ्रंशस्य व्राचडयान्ध्रीवर्जं सप्तविंशतिधा विभागः, पैशाच्याः कैकेय्यादिभेदेन त्रेधा विभागश्च परिकलितो दृश्यते। इत्थं च सर्वैरपि प्राकृतवैयाकरणैः प्राकृती शौरसेनी मागधी पैशाची चेति चतस्रो भाषाः परिगृहीता इति ज्ञायते। श्रीवाल्मीकीयप्राकृतशब्दानुशासनहेमचन्द्रशब्दानुशासनयोस्तु चूलिका-पैशाच्यपभ्रंशाद्वयमधिकं प्राकृतभाषाद्वयमभिप्रेत्य प्राकृतभाषायाः षाड्विध्यमुररीकृतमित्यलं विस्तरेण ॥

## प्राकृतादिनामधेयनिदानम्, प्राकृतादिभाषाणां विनियोगक्रमश्च.

अथेदानीं प्राकृतादिभाषाव्यपदेशनिमित्तं तद्विनियोगप्रकारश्च संगृह्यते। यथा—प्राकृतभाषा महाराष्ट्रदेशोद्भूतत्वान्माहाराष्ट्रीत्युच्यते। तथा

शूरसेनमगधपिशाचादिदेशोद्भूतत्वादन्याश्चतस्रो भाषाः शौरसेनीमागधीपैशाचीचूलिकापैशाच्य इत्युच्यन्ते। षष्ठी त्वपभ्रंशभाषा निहीनाभीरादिव्यवह्रियमाणतया तथोच्यते। दृश्यकाव्येषु तु स्त्रीपात्राणां प्राकृतभाषा, मध्यमाधमपात्राणां शौरसेनी, धीवरादीनां मागधी, रक्षःपिशाचादीनां पैशाचीचूलिकापैशाच्यौ, चण्डालयवनादीनामपभ्रंशभाषेति षड्भाषाचन्द्रिकोपोद्घातेऽभ्यधायि॥

यथा—

षड्विधा सा प्राकृती च शौरसेनी च मागधी।
पैशाची चूलिकापैशाच्यपभ्रंश इति क्रमात्।
तत्र तु प्राकृतं नाम महाराष्ट्रोद्भवं विदुः।
शूरसेनोद्भवा भाषा शौरसेनीति गीयते।
मगधोत्पन्नभाषां तां मागधीं संप्रचक्षते।
पिशाचदेशनियतं पैशाचीद्वितयं भवेत्।
पाण्ड्यकेकयबाह्लीकसिंहनेपालकुन्तलाः।
सुधेष्णभोजगान्धारहैवकन्नोजकास्तथा।
एते पिशाचदेशाः स्युस्तद्देश्यस्तद्गुणो भवेत्।
पिशाचजातमथवा पैशाचीद्वयमुच्यते।
अपभ्रंशस्तु भाषा स्यादाभीरादिगिरां चयः।
कविप्रयोगानर्हत्वान्नापशब्दस्स तु क्वचित्।
तत्र तु प्राकृतं स्त्रीणां सर्वासां नियतं भवेत्।
अधमे मध्यमे वाऽपि शौरसेनी प्रयुज्यते।
धीवराद्यतिनीचेषु मागधी विनियुज्यते।
रक्षःपिशाचनीचेषु पैशाचीद्वितयं भवेत्।
अपभ्रंशस्तु चण्डालयवनादिषु युज्यते।

इति। केषु चिन्निमित्तेषु नाटकीयपात्राणां तत्तद्भाषाव्यत्ययोऽप्यभ्युपगम्यते। तदपि तत्रैव यथा—

सर्वेषां कारणवशात्कार्यो भाषाव्यतिक्रमः।
माहात्म्यस्य परिभ्रंशं मदस्यातिशयं तथा।
प्रच्छादनं च विभ्रान्तिं यथालिखितवाचनम्।
कदाचिदनुवादं च कारणानि प्रचक्षते॥

इति॥

## एतत्प्राकृतसूत्रकर्तृपरिचयः.

'सिद्धिर्लोकाच्च' इत्यारभ्य 'ङ्गाडगास्तु देश्यास्सिद्धाः' इत्यन्तस्यास्य अध्यायत्रितयपरिमितस्य प्राकृतशब्दानुशासनस्य प्रणेता वाल्मीकिरिति एतद्व्याख्यानभूतषड्भाषाचन्द्रिकाकृता लक्ष्मीधरसूरिणा—

वाग्देवी जननी येषां वाल्मीकिर्मूलसूत्रकृत् ।

इत्यनेनाभिहितं दृश्यते । ग्रन्थप्रदर्शिनीपुस्तकमालायां मुद्रिते त्रिविक्रमवृत्तिसहिते कोशे परिदृश्यमानटिप्पण्यां तु—

प्राकृतपदार्थसार्थप्राप्त्यै निजसूत्रमार्गमनुजिगमिषताम् ।
वृत्तिर्यथार्थसिद्ध्यै त्रिविक्रमेणागमक्रमात्क्रियते ॥
प्राकृतरूपाणि यथा प्राच्यैराहेमचन्द्रमाचार्यैः ।
विवृतानि तथा तानि प्रतिबिम्बन्तीह सर्वाणि ॥

इति त्रिविक्रमवृत्त्युपोद्घाते 'निजसूत्रमार्गमनुजिगमिषताम्' इत्यस्य 'निजानि स्वीयानि यानि सूत्राणि तेषां मार्गमनुजिगमिषताम्' इत्यर्थमभिप्रेत्य 'प्राच्यैराहेमचन्द्रमाचार्यैः' इत्यस्य स्थाने 'प्राच्येतसहेमचन्द्राद्यात्' इति पाठान्तरं प्रदर्श्य "एतत्पाठमनुसृत्यैव षड्भाषाचन्द्रिकाकारेणोक्तं 'वाग्देवी जननी येषां वाल्मीकिर्मूलसूत्रकृत्' इति तदेतत् निजसूत्रमार्गमनुजिगमिषतामिति त्रिविक्रमग्रन्थेनापास्तम्" इति ग्रन्थेन एतत्प्राकृतशब्दानुशासनस्य वाल्मीकिकर्तृकत्वाभिप्रायकः षड्भाषाचन्द्रिकाग्रन्थः खण्डितो दृश्यते । तेन च ज्ञायते निरुक्तटिप्पणीकृन्मते प्राकृतशब्दानुशासनाख्यमूलसूत्रप्रणेताऽपि वृत्तिकृत् त्रिविक्रमदेव एवेति ॥

वयं तु मन्यामहे त्रिविक्रमदेवो वृत्तेरेव प्रणेता न तु सूत्रजालस्येति षड्भाषाचन्द्रिकाकृता 'वाल्मीकिर्मूलसूत्रकृत्' इत्युक्तमेव साध्विति । ननु 'निजसूत्रमार्गमनुजिगमिषताम्' इति त्रिविक्रमवृत्तिग्रन्थादेव सूत्रजालस्यापि त्रिविक्रमोपज्ञत्वं सिद्धमिति टिप्पणीकृता साधितमेवेति चेन्न । निजसूत्रमार्गमित्यस्य निजानि स्वीयानि यानि सूत्राणि तेषां मार्गमिति नार्थः । किं तु निजः स्वाभाविकोऽनारोपितः सूत्रशैलीस्वरससिद्धो यस्सूत्रमार्ग इत्येवार्थो वर्णनीयः । अत एव तत्रैवोत्तरार्धे 'आगमक्रमात्क्रियते' इत्युक्तम् । ततश्च सूत्रस्वरससिद्धोऽर्थः पूर्वव्याख्यातृपरंपराक्रममनुरुध्य प्रदर्श्यत इत्येवार्थस्साधीयान् पर्यवस्यति । सूत्रजालस्यापि वृत्तिकृत्त्रिविक्रमोपज्ञत्वे तदीयायामेव वृत्तौ आगमक्रमानुसरणोक्तिः कथं घटेत?

किंचैतच्छब्दानुशासन एव द्वितीयाध्याये प्रथमपादे 'केवले णवर' (प्रा. सू. २-१-४६) इति सूत्रे त्रिविक्रमवृत्तावेव—"केचित्तु केवलानन्तर्ययोर्णवरणवरिअ इत्येकमेव सूत्रमाहुः" इत्युक्तम्। सूत्रजालस्यापि त्रिविक्रमप्रणीतत्वाभ्युपगमे तदुपज्ञत्वात्सूत्रजालस्य तदीयसूत्रानुपूर्व्यामन्येषां केषांचित्पाठान्तरपक्षस्यैवानुदयात् केचित्त्वित्यादित्रिविक्रमवृत्तिग्रन्थस्यैवाभित्तिचित्रायितत्वमापद्येत। तस्माच्चावसीयत एतत्सूत्रजालस्य कर्ता त्रिविक्रमादन्य एवेति। स च प्राचीनलक्ष्मीधरोक्त्या वाल्मीकिरेव स्यात्। परं तु स वाल्मीकिः श्रीमद्रामायणप्रणेतैवेत्यत्र अनन्यथासिद्धं प्रमाणं नोपलभ्यते। अत एव 'अनुक्तमन्यशब्दानुशासनवत्—कौमारजैनेन्द्रपाणिनीयप्रभृतिषु व्याकरणेषु यथोक्तं तथैव वेदितव्यम्' इति त्रिविक्रमवृत्तावभिहितं दृश्यते। न हि पाणिन्यादिभ्योऽनन्तरो वाल्मीकिमहर्षिः। किं चात्र सूत्रे शातवाहनाद्याधुनिकनाम्नां ग्रहणाच्च वाल्मीकिमहर्षेरन्य एव पण्डितप्रकाण्डो वाल्मीकिनामा कश्चित्स्यादिति वयं संभावयामः॥

महीशूरनगर्यामान्ध्रलिप्यां मुद्रितस्य मल्लिकामारुताख्यप्रकरणकोशस्यादौ श्रीरङ्गस्थवाणीविलासमुद्राक्षरशालायां च मुद्रिते शंभुरहस्ये—

> को विनिन्देदिमां भाषां भारतीमुग्धभाषितम्।
> यस्याः प्रचेतसः पुत्रो व्याकर्ता भगवानृषिः॥
> गार्ग्यगालवशाकल्यपाणिन्याद्या यथर्षयः।
> शब्दराशेस्संस्कृतस्य व्याकर्तारो महत्तमाः॥
> तथैव प्राकृतादीनां षड्भाषाणां महामुनिः।
> आदिकाव्यकृदाचार्यो व्याकर्ता लोकविश्रुतः॥
> यथैव रामचरितं संस्कृतं तेन निर्मितम्।
> तथैव प्राकृतेनापि निर्मितं हि सतां मुदे॥
> पाणिन्याद्यैश्शिक्षितत्वात्सांस्कृती स्याद्यथोत्तमा।
> प्राचेतसव्याकृतत्वात्प्राकृत्यपि तथोत्तमा॥
> प्राकृतं चार्षमेवेदं यद्धि वाल्मीकिशिक्षितम्।
> तदनार्षं वदेद्यो वै प्राकृतस्स्यात्स एव हि॥

इत्यादीनि प्राकृतसूत्रजालस्यास्य प्राचेतसवाल्मीकिकर्तृकत्वे प्रमाणान्युपलभ्यन्ते। तत्परिशीलनायां च एतत्प्राकृतशब्दानुशासनादन्यदेव एतन्मूल-

भूतं वाल्मीकिमहर्षिप्रणीतं प्राकृतव्याकरणसूत्रजालं स्यादित्यभ्युपेयमिति प्रतिभाति। अत एव षड्भाषाचन्द्रिकायामपि 'सूत्रकृत्' इत्येतावन्मात्र-मनुक्त्वा 'मूलसूत्रकृत्' इत्युक्तमिति वयं संचिन्तयामहे ॥

## एतत्प्राकृतसूत्रव्याख्यातृपरिचयः.

एतद्वाल्मीकीयप्राकृतसूत्रव्याख्यारूपस्य प्राकृतमणिदीपाह्वयस्यास्य रचयिता चिनबोम्मभूपाल इत्येतद्ग्रन्थोपोद्धातान्ते परिदृश्यमानेन—

अनुग्रहाद्ब्राह्मणपुङ्गवानामवाप्तविद्यश्चिनबोम्मभूपः ।
करोत्यमुं प्राकृतरत्नदीपं मन्दानिलस्पन्दनिभैर्वचोभिः ॥

इति श्लोकेन यद्यपि प्रतीयते, तथाऽप्यत्रैव तत्तत्प्रकरणान्ते परिदृश्यमानायाः—

'इति श्रीमद्दक्षिणसमुद्राधीश्वरचोक्कनाथभूपालप्रियसचिव-सज्जनावलम्ब-ब्रह्मण्यविरुदाङ्क-चिनबोम्मभूपालहृदयकुहरविहरमाण - साम्बशिवप्रेरितेनाप्पयदीक्षितेन कृते प्राकृतमणिदीपे'

इति प्रशस्तिपङ्क्त्या परिशीलनया चिनबोम्मभूपालप्रेरितः श्रीमानप्पय्यदीक्षिताह्वयस्सुधीरेवास्य कर्तेत्यवसीयते। ततश्च 'अनुग्रहात्' इत्याद्युपोद्धातान्तदृश्यमानश्लोके 'करोति' इत्येतदन्तर्भावितण्यर्थक इत्यभ्युपगन्तव्यम्। अथवा अप्पय्यदीक्षितसुधीरेव स्वप्रणीतमप्येनं ग्रन्थं स्वाश्रयभूतचिनबोम्मभूपालकृतत्वेन व्यपदिदेशेत्यभ्युपेयम्। तत एवात्रोपोद्धाते—

वार्तिकार्णवभाष्याद्या अप्पयज्वकृताश्च ये ।

इत्यत्र, तथा तिङन्तप्रकरणे 'स्यस्य सो लृटि' इति सूत्रे 'हसिसइ' इत्युदाहृत्य 'शेषादेशस्येति द्वित्वं केचिदाहुः, प्रकरणभेदान्नेत्यस्मद्दीक्षिताः' इत्यत्र च 'अप्पयज्व' इति 'दीक्षिताः' इति चाप्पय्यदीक्षितसुधीनामानुवादोऽपि नानुपपद्यते ॥

चिनबोम्मभूपसमाश्रिताप्पय्यदीक्षितप्रणीतत्वादेव चात्रोत्तरत्र तत्तद्भाषाप्रकरणान्ते—

जेउ चिणबोम्मणिवई वम्महपरिहाविणिम्मलाआरो।
मणरहपूरणचउरो जं पेक्खिरमग्गिराणमत्थीणं ॥ १ ॥

[छाया—जयतु चिनबोम्मनृपतिर्मन्मथपरिभाविनिर्मलाकारः।
मनोरथपूरणचतुरो यद्दृष्टं तद्याचमानानामर्थिनाम्।]

जुवइजणो सुरतरुणो नावेदि सिरं सुमाइ अवचिणिदुं।
उवगदुअ वण्णिअंतो वोम्मणरेंदस्स वितरणउणाइं ॥ २ ॥
[छाया—युवतिजनस्सुरतरोर्नमयति शिरस्सुमान्यपचेतुम्।
उपगम्य वर्णयन् वोम्मनरेन्द्रस्य वितरणगुणान् ॥]
शाळदनीळदपाळदनाळदशुळकळडिशाळिशकळनिअळे।
वोम्मनिवाळ जशे दे दशदिशमेशे पआशेदि ॥ २ ॥
[छाया—शारदनीरदपारदनारदसुरकरटिसदृशकरनिकरम्।
वोम्मनृपाल यशस्ते दश दिश एतत्प्रकाशयति ॥]
ईसीसितुंनयातो तेसिजना तलइ वोम्मभूमिंतो।
ईतिसमनत्थं न मुनति सक्कपतं ते वळातु गेण्हन्ति ॥
[छाया—ईषदीषद्दुर्नयाद्द्वेषिजनान् दलयति वोम्मभूमीन्द्रः।
ईदृशनयं न जानाति शक्रपदं ते वलाद्गृह्णन्ति ॥]
लधकचतुलकफटम्मि वि चतुलङ्के खण्टितम्मि तेसीनम्।
पोम्मचनपाल वट्टति अपलङ्कं तानअस्स नीसंकं ॥
[छाया—रथगजतुरगभटे अपि चतुरङ्गे खण्डिते द्वेषिणाम्।
वोम्मजनपाल वर्तते अपराङ्कं त्राणाय निश्शङ्कम् ॥]
इत्येतानि परिदृश्यमानानि चिनवोम्मभूपालस्तावकानि पद्यान्युपपद्यन्ते। ग्रन्थसमाप्त्यनन्तरं दृश्यमानं—
गुरुणो मज्झ विज्जाण सद्दसम्माणिअत्थिणो।
झाआमि पाअपोम्माइ सच्चिआणंदसत्थिणो ॥
[छाया—गुरोर्मम विद्यानां सदा संमानितार्थिनः।
ध्यायामि पादपद्मे सच्चिदानन्दशास्त्रिण ॥]
इतीदं पद्यं तु अप्पय्यदीक्षितीयस्याप्येतस्य चिनवोम्मभूपकृतत्वव्यपदेशवलात्समायातमाहोस्वित् ग्रन्थलेखकप्रणीतं वा स्यादित्ययथावत्समुपलब्धप्रमाणवलादवसीयते। स चायमप्पय्यदीक्षितः को नामेति जिज्ञासायामत्रैव तत्तत्प्रकरणान्तेषु 'चिनवोम्मभूपालहृदयकुहरविहरमाणसाम्बशिवप्रेरितेनाप्पयदीक्षितेन' इत्युक्तिदर्शनाद्विजयनगरदेशाधीशाश्रितं चिनवोम्मभूपालं समाश्रित. शताधिकप्रवन्धनिर्मातृत्वेन सुप्रतीतः श्रीमानप्पय्यदीक्षितेन्द्र एव स्यादिति सम्भाव्यते। श्रीकण्ठाचार्यप्रणीततया परिदृश्यमानस्य श्रीब्रह्मसूत्रश्रीकण्ठभाष्यस्य सुप्रसिद्धाप्पय्यदीक्षितप्रणीतायां शिवार्कमणिदीपिकाव्याख्यायां तत्तदध्यायपादान्तेषु—' इति

श्रीशिवातिवादिमूर्धन्य-शिवदर्शनस्थापनधुरन्धर-सकलदेवभूदेवप्रतिष्ठा-पक-श्रीमच्चिनबोम्मभूपालहृदयकुहरविहरमाण-श्रीसाम्बशिवप्रेरितस्याप्पयदीक्षितस्य कृतौ श्रीकण्ठाचार्यविरचितब्रह्ममीमांसाभाष्यव्याख्यायां शिवार्कमणिदीपिकायां' इति परिदृश्यमानायां प्रशस्तिपङ्क्तौ तथैतत्प्राकृतमणिदीपेऽपि तत्तत्प्रकरणान्तेषु 'इति श्रीदक्षिणसमुद्राधीश्वरचोक्कनाथभूपालप्रियसचिव-सज्जनावलम्ब-ब्रह्मण्यबिरुदाङ्कचिनबोम्मभूपालहृदयकुहरविहरमाणसाम्बशिवप्रेरितेनाप्पयदीक्षितेन कृते प्राकृतमणिदीपे' इति परिदृश्यमानायां प्रशस्तिपङ्क्तौ च 'चिन्नबोम्मभूपालहृदयकुहरविहरमाणसाम्बशिवप्रेरितस्याप्पयदीक्षितस्य' इत्यानुपूर्व्यैकरूप्यदर्शनादप्येतत्प्रबन्धकर्ता सुप्रसिद्धोऽप्पयदीक्षितेन्द्र एवेति निर्धार्यते। अत्रोभयत्र प्रशस्तिपङ्क्त्योर्दृश्यमानं चिन्नबोम्मभूपालविशेषणवैलक्षण्यं तु तत्तद्ग्रन्थानुगुणौचित्यमूलकमेवेति ज्ञायते। तस्मादेतत्प्रणेतुः सुप्रसिद्धाप्पयदीक्षितादन्यत्वे अनन्यथासिद्धं प्रबलतरं प्रमाणं गवेषणीयमिति विरम्यते॥

## एतद्व्याख्याकृतोऽप्पय्यदीक्षितेन्द्रस्य जननकालः.

स चायमप्पय्यदीक्षितेन्द्रः कदापुनरेतद्भूमण्डलमात्मनो जनुषा मण्डयामासेति चिन्तायामस्मिन् विषये एतत्प्रणीतप्रबन्धेषु सुस्पष्टकण्ठोक्तिं नोपलभामहे। तथाऽपि शिवानन्दाख्यसंयमिना प्रणीते अप्पयदीक्षितचरितनाम्नि चम्पूप्रबन्धे—

> वीणातत्वज्ञ (४६५४) संख्यालसितकलिसमाभाक्प्रमादीचवर्षे
> कन्यामासेऽथ कृष्णप्रथमतिथियुतेऽप्युत्तरप्रोष्ठपाङ्के।
> कन्यालग्नेऽद्रिकन्यापतिरमितदयाशेवधिर्वैदिकेषु
> श्रीदेव्यै प्राग्यथोक्तं समजनि स समीपेऽत्र काञ्चीनगर्याः॥

इत्युपलभ्यमान श्लोकेनैतज्जन्मसमयस्समग्राहि। तथा तत्रैव 'कल्यब्दाः ४६५४, पाण्डवाब्दाः ४६५५, शकाब्दाः १४७५, विक्रमाब्दाः १६१०, कोल्लाब्दाः ७२९, कृष्णराजाब्दाः २४, कल्यादिदिनानि ७०००८७३, प्रभवादि ४६तमे प्रमादीचवत्सरे कन्यामासि पञ्चमे दिने सोमवारे कन्यालग्ने प्रातश्शुभमुहूर्ते वेदविहितकर्मभक्तियोगज्ञानाभ्यासशरणेषु सज्जनेषु कुमतिहतपाषण्डकोलाहलविभीतेषु अनवधिदयानिधिरद्रिकन्यापतिर्यथा प्राक्कालान्तरे श्रीपार्वत्यै शिवरहस्याख्येतिहासे भविष्यत्कथाप्रसङ्गे—

> भारद्वाजकुले देवि कलौ कलुषदूषिते।

इत्यारभ्य--

' भूसुराचारनिरतो भविष्ये भूसुरोऽम्बिके।

इत्यादिवचनोक्तप्रकारेण काञ्चीनगर्याः पश्चात्समीप एव भगवान् समवातरत्' इति तच्छ्लोकविवरणं च कृतं दृश्यते॥

यद्यपीदानीमुपलभ्यमानायां डाक्टर् स्वामिकण्णुपिळ्ळैमहाशयप्रणीतायां 'एफिमरि' इत्याख्यातायां प्राच्यकालगणनसूचन्यां तस्मिन् प्रमादीचवत्सरे कन्यामासि पञ्चमे दिने द्वादशीतिथ्याश्लेषानक्षत्रयोगस्यैवोल्लेखो दृश्यते, न त्वेतद्विवरणसंवादी कृष्णप्रतिपदुत्तरप्रोष्ठपदनक्षत्र योगोल्लेखः, तथाऽपि 'वीणातत्वज्ञ' इत्यादिमूलश्लोके वासराद्यनुल्लेखेन तस्मिन्नेव वत्सरे कन्यामासे द्वाविंशे त्रयोविंशे वा दिने गणितभेदेन पूर्वोक्तो योगस्संभवेदिति स एवास्य दीक्षितेन्द्रस्य जन्मसमयः (A. D. 22-9-1553) स्यादिति संभाव्यते। तत्रैवोत्तरत्र शिवानन्दीये—

लग्ने रवीन्दुसुतयोर्मकरे च मान्दौ
मीने शशिन्यथ वृषे रविजे च राहौ।
चापे गुरौ क्षितिसुते मिथुने तुलायां
शुक्रे शिखिन्यलिगते शुभलग्न एवम्॥

इति श्लोकदर्शनात्—

| | | | |
|---|---|---|---|
| चन्द्रः | | राहुः शनिः | कुजः |
| | अप्पय्यदीक्षित जनन कालिक ग्रहराशिचक्रम् | | |
| मान्दिः | | | |
| गुरुः | केतुः | शुक्रः | रविः बुधः लग्नं |

इदमप्पय्यदीक्षितेन्द्रजननकालिकग्रहराशिचक्रं निर्दिष्टं भवति॥

## अप्पय्यदीक्षितेन्द्राश्रयभूता राजानः.

एतद्दीक्षितेन्द्रप्रणीतचित्रमीमांसायां परिणामोत्प्रेक्षालङ्कारप्रकरणयोः—

द्विर्भावः पुष्पकेतोर्विबुधविटपिनां पौनरुक्त्यं विकल्प-
श्चिन्तारत्नस्य वीप्सा तपनतनुभुवो वासवस्य द्विरुक्तिः।

द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य कुर्वन्
आनन्दं कोविदानां जगति विजयते श्रीनृसिंहक्षितीन्द्रः ॥

(चि-मी)

नरसिंहमहीपाल विदुस्त्वां मकरध्वजम् ।
मार्गणास्तव सञ्जाताः कथं सुमनसोऽन्यथा ॥ (चि-मी)

इति श्लोकद्वयस्य दर्शनात्, तथा श्रीयादवाभ्युदयव्याख्या-श्रीकण्ठ-भाष्यवाख्याभूतशिवार्कमणिदीपिका-प्राकृतमणिदीप-समरपुङ्गवप्रणीतया-त्राप्रबन्धेषु—

'श्रीचिन्नतिम्मराजः प्रतापनीराजितक्ष्मावलयः'।

(या-व्या.)

'भाष्यमेतदनघं विवृण्विति स्वप्नजागरणयोस्समं प्रभुः।
चिन्नवोम्मनृपरूपभृत्स्वयं मां न्ययुङ्क्त महिलार्धविग्रहः ॥'

(शि-म-दी.)

'चिन्नवोम्मभूपालहृदयकुहरविहरमाणसांबशिवप्रेरितेनाप्पय-दीक्षितेन' (प्रा-म-दी)

'कर्णश्रीचिन्नबोम्भक्षितिपतिरभितो लम्भयन् शातकुम्भ-
स्तोमं हेमाभिषेकप्रणयनसमये यस्य मूर्तिं प्रशस्याम्।
रेजे श्रीरङ्गराजाध्वरिवरकलशाम्भोधिरत्नप्रसूते-
र्विद्याकल्पद्रुमस्य स्वयमिव कलयन् जातरूपालवालम् ॥'

(या-प्र)

इति श्लोकोपलम्भात्, तथैतदीयविधिरसायनचन्द्रालोकयोः—

'प्राप्तं तत्प्रापणीयं किल यदिह कियान् पूरणीयोऽपि नांशः
नानिष्टं वा निवर्त्यं निजविषयतया दृश्यते किंचिदत्र।
किं तु व्यापारमेष प्रथयति फलसंयोजनार्थं परेषां
प्राप्तः पुण्यैरगण्यैरिव विबुधगणो वेंकटक्षोणिपालम्' ॥

(वि-र)

'अमुं कुवलयानन्दमकरोदप्पदीक्षितः।
नियोगाद्वेंकटपतेर्निरुपाधिकृपानिधेः ॥'

(कु.)

इत्यादिदर्शनाच्चायं दीक्षितेन्द्रो विजयनगराधीशानुबन्धिनृसिंह-चिन्न-तिम्म-चिन्नबोम्म-वेंकटभूपालानां समकालिक इति ज्ञायते। तेषां च

भूपालानां समयः क्रैस्ताब्दीयषोडशशतकापरार्धादारभ्य सप्तदशशत-कापरार्धपर्यन्त इति पुरावृत्तविमर्शकास्सङ्गिरन्ते। ततश्चायमपि समयोऽ-नुपदनिर्दिष्टदीक्षितेन्द्रीयसमयमेव संवदतीति नात्र संशयस्यावकाशः। तथा एतदप्पय्यदीक्षितेन्द्रसोदरचारुदीक्षितपौत्रेण नीलकण्ठदीक्षितेन स्वप्रणीतनीलकण्ठविजयचम्पूप्रबन्धान्ते—

अष्टात्रिंशदुपस्कृतसप्तशताधिकचतुस्सहस्रेषु (४७३८)।
कलिवर्षेषु गतेषु ग्रथितः किल नीलकण्ठविजयोऽयम्॥

इति तत्प्रणयनकालो निरदेशि। तत्परिशीलनायामप्येतद्दीक्षितेन्द्रस्य नीलकण्ठदीक्षितपितामहसोदरतया पूर्वप्रदर्शितदीक्षितेन्द्रजननसमयमे-वोपोद्बलयतीति सुव्यक्तमेव॥

## अप्पय्यदीक्षितेन्द्रवंशजाः पूर्वपुरुषाः.

एतेषां दीक्षितेन्द्राणां कूटस्थो वक्षस्स्थलाचार्यनामा सुधीन्द्र इत्ये-तत्प्रणीतचित्रमीमांसायां सन्देहालङ्कारध्वन्युदाहरणप्रदर्शनावसरे — 'यथाऽस्मत्कुलकूटस्थवक्षःस्थलाचार्यविरचिते वरदराजवसन्तोत्सवे' इत्युक्तिदर्शनादवसीयते। अत्र केचिदेनं वक्षस्स्थलाचार्यं द्राविडभाषायां आच्चान्दीक्षितपदव्यपदेश्यं मन्वानाः

आसेतुबन्धतटमा च तुषारशैलात्
आचार्यदीक्षित इति प्रथिताभिधानम्।
अद्वैतचित्सुखमहाम्बुधिमग्नभाव-
मस्मत्पितामहमशेषगुरुं प्रपद्ये॥

इत्येतद्दीक्षितप्रणीते न्यायरक्षामणौ दर्शनात् एनमेव संस्कृते आचार्य-दीक्षितापरनामानं दीक्षितेन्द्राणां पितामहं चाभिप्रयन्ति। अभिदधते चायमाच्चान्दीक्षितः कदाचित्काञ्चीनगराधीश्वरश्रीवरदराजदेवसेवार्थं महिष्या सार्धं समागत्य पाण्ड्यराजे संसेवमाने सति तन्महिषीसौन्दर्य-भूमानं—

काञ्चित्काञ्चनगौराङ्गीं वीक्ष्य साक्षादिव श्रियम्।
वरदस्संशयापन्नो वक्षस्स्थलमवेक्षते॥

इति सचमत्कारोल्लेखमुपश्लोकयामासेति तदाप्रभृत्यस्य वक्षःस्थलाचार्य इति प्रख्यातिस्संबभूवेति। दीक्षितेन्द्रैरेवायं श्लोकश्च चित्रमीमांसायां सन्देहालङ्कारध्वन्युदाहरणतयोपात्तः परिदृश्यते॥

शिवानन्दयतिप्रणीताप्पयदीक्षितचरितचम्पूप्रबन्धे तु—

श्रीमत्काञ्चीनगरपरिसरे पूर्वपुण्यैकलभ्ये
श्रीमानास्तेऽडयपलमित्यग्रहारस्सुदीप्रः ।
तस्मिन् वक्षःस्थलगणपतेः श्रीभरद्वाजगोत्र-
प्रादुर्भूतादजनि शितधीः श्रीमदाच्चान्मखीन्द्रः ॥

इत्युक्तिपरिशीलनायां अहर्निशं गणपतेर्हृदये धारणादनुध्यानात् पूर्वप्रदर्शितकिंवदन्त्या एतद्विषयकत्वाद्वा वक्षःस्थलगणपतिरिति प्रख्यातस्य गणपतिनाम्नस्सुधीमणेस्तनय एवायमाच्चान्दीक्षितो दीक्षितेन्द्रस्य प्रपितामह एव न तु पितामह इति ज्ञायते। अत एव दीक्षितेन्द्रैरपि 'अस्मत्पितामहं' इत्यादिन्यायरक्षामण्युक्तिविलक्षणतया चित्रमीमांसायां 'अस्मत्कुलकूटस्थवक्षःस्थलाचार्यं' इत्यत्र 'कूटस्थ' इत्युक्तिरपि स्वरसतरमुपपद्यते ॥

एवं एतद्दीक्षितेन्द्रप्रणीते कल्पतरुव्याख्याभूतपरिमलग्रन्थे—

श्रीत्रैकुण्ठाचार्यवंशाम्बुधिहिमकिरणश्रीमदद्वैतविद्या-
चार्यश्रीरङ्गराजाह्वयविस्तृतयशोविश्वजिद्याजिसूनोः ।

इति। तथा न्यायरक्षामणौ—

'आचार्यदीक्षित इति प्रथिताभिधानं-अस्मत्पितामहमशेषगुरुं'
इति चोक्तिः परिदृश्यते। इत्थं चायं दीक्षितेन्द्रः श्रीवैकुण्ठाचार्यवंश्यस्य वक्षस्स्थलगणपतिनाम्नः प्रपौत्रः आच्चान्दीक्षितापरनाम्न आचार्यदीक्षितस्य पौत्रः श्रीरङ्गराजाध्वरिणः पुत्रश्चेति निर्धार्यते। केचित्तु दीक्षितेन्द्रमेनं श्रीवैकुण्ठाचार्यवंश्यस्य श्रीरङ्गराजाध्वरिणो दौहित्रं मन्यन्ते। उदाहृतस्य 'श्रीवैकुण्ठाचार्य' इत्यादिपद्यस्य परिशीलनायां तु दीक्षितेन्द्रपिता श्रीरङ्गराजाध्वरीति, तद्वंशकूटस्थ एव श्रीत्रैकुण्ठाचार्य इति च स्वरसतरं प्रतीत्या श्रीवैकुण्ठाचार्यस्य मातामहवंशकूटस्थत्वं श्रीरङ्गराजाध्वरिणो मातामहत्वं च कथं सङ्गच्छेतेति सुधीभिर्विभावनीयम् ॥

दीक्षितेन्द्रस्यास्य पित्रा कृतं गणेश इति शर्मनाम, प्रेम्णा त्वप्प इति व्यवहारनामेति—

'सौहार्देन यदप्प इत्यनुदिनं पित्राऽर्पितं तद्बुधैः
नामासीदथ नामकर्मणि गणेशाख्या कृता तेन च ।

इति शिवानन्दीये उक्तं दृश्यते। दीक्षितेन्द्रीयग्रन्थेषु कुत्राप्यात्मनो गणेश इति शर्मनामेत्युक्तं न दृश्यते। अप्प इति नामैव यज्ञानुष्ठाननिबन्धन-

दीक्षितपदेन भाषान्तरीयपूज्यार्थकाप्यपदेन च संयुतं सत् 'अप्पदीक्षितः' 'अप्पय्यदीक्षितः' इति च सुप्रसिद्धम् ॥

## अप्पय्यदीक्षितेन्द्रीयविद्योत्कर्षादिकम्.

दीक्षितेन्द्रोऽयं राजास्थान्यां श्रीविशिष्टाद्वैतसंप्रदायाचार्यपुरुषपीठमधिष्ठितवतः प्राचीनश्रीमत्तातार्यस्य वंशोद्भूतेन केनचित्तातार्यसुधीन्द्रेण सार्धं विवदमानः समुपजातक्लेशः समधिगतवैष्णवसंप्रदायादरोऽपि ताताचार्यसुधीविद्वेषभूम्ना शैवसिद्धान्तप्रतिष्ठापनाय बद्धपरिकरोऽभूदिति केचित्कथयन्ति । श्रीताताचार्याप्पय्यदीक्षितेन्द्रयो राजसभायां प्रथमसभाजनविषये महान्विवादश्चासीदिति शिवानन्दीयेऽप्यभिहितं दृश्यते। तदेतदुपोद्बलयतीव चैतद्दीक्षितेन्द्रप्रणीततया परिदृश्यमानं—

'मार्गसहायं भगवन्तमेव विश्वस्य विश्वाधिक निर्गतोऽस्मि ।
शास्त्रं प्रमाणं यदि सा विपत्स्यात्तस्यैव मन्दो मयि यां चिकीर्षेत्' ॥

इत्यारभ्य—

सकलभुवनकर्ता साम्बमूर्तिश्शिवश्चे-
त्सकलमपि पुराणं सागमं चेत्प्रमाणम् ।
यदि भवति महत्त्वं भस्मरुद्राक्षभाजां
किमिति न मृतिरस्मद्द्रोहिणः स्यादकाण्डे ॥

इत्यन्तं निग्रहाष्टकनामकम् ॥

अत एव हस्तिगिरीश्वरं भगवन्तं श्रीमद्वरदराजमधिकृत्य श्रीवरदराजस्तवाद्याः श्रीकृष्णध्यानप्रकारवर्णनपराः श्रीकृष्णध्यानपद्धत्याख्या बहवो विष्णुस्तोत्रप्रबन्धाः श्रीवेदान्ताचार्यीययादवाभ्युदयव्याख्यादयः नयमयूखमालिकादयो विशिष्टाद्वैतसिद्धान्तग्रन्थाश्च प्रथमतः प्रणीता दृश्यन्ते । तदनु च—

'मुरारौ च पुरारौ च न भेदः पारमार्थिकः ।
तथाऽपि मामकी भक्तिश्चन्द्रचूडे प्रधावति ॥'

इत्यभिसंदधता शिवतत्त्वविवेकशिवार्कमणिदीपिकादयश्शैवसिद्धान्तग्रन्थाः, बहवस्सगुणनिर्गुणस्तुतिपरग्रन्थाश्च रचिता उपलभ्यन्त इत्यपि कथयन्ति । अस्तु च यथा तथा वा ; सर्वथाऽप्ययं दीक्षितेन्द्रः परिचितानेकदर्शनसमधिगतनिस्सीमानितरसाधारणनिजशेमुषीप्रकर्षेण सर्वमपि संसाधयितुं प्रभवतीत्यदसीयनानामतानुरोध्यनेकविधप्रबन्धपरिशीलनपराणां विपश्चिदपश्चिमानामतिरोहितमेतदित्यलमधिकेन ॥

## अप्पय्यदीक्षितेन्द्रीयविद्यागुरवः.

सोऽयं दीक्षितेन्द्रः—

'तं सर्ववेदसमशेषबुधाधिराजं श्रीरङ्गराजमखिनं गुरुमानतोऽस्मि।'

'महागुरून्नमस्यामि सादरं सर्ववेदसः'

'शुद्ध्यै संकलयामि तातचरणव्याख्यावचःख्यापितान्॥'

इत्याद्येतत्प्रणीत-न्यायरक्षामणि-शिवतत्त्वविवेक-सिद्धान्तलेशसंग्रहेषूपल-भ्यमानोक्तिपरिशीलनया स्वपितृचरणश्रीरङ्गराजाध्वरिसकाशादेवाधिगत-विद्य इति केचिदभिदधते। शिवानन्दीये तु—

'नवमेऽस्य वयसि जाते ताते शीतांशुशेखरापहृते।
याते च कालधर्मे'

इत्युक्तेर्दर्शनादस्य नवम एव वयस्येतत्तातचरणनिर्याणप्रतीत्या नवमवत्स-रात्पुरैव स्वतातपादादस्य विद्याधिगमस्स्यादित्यूह्येयम्, अथवा तदन्यस्मा-दस्य विद्याधिगमस्स्यादित्यभ्युपेयम्। अस्मिंश्च द्वितीये पक्षेऽनुपदप्रदर्शित-न्यायरक्षामण्यादिग्रन्थेषु श्रीरङ्गराजस्य स्वतातपादस्य गुरुत्वोत्कीर्तनं तु स्वजनकत्ववेदान्तग्रन्थप्रणेतृत्वादिनिबन्धनं स्यादित्यङ्गीकरणीयम्। अत एव संक्षेपशारीरकव्याख्या-तत्त्वविवेक-भेदधिक्काराद्यनेकग्रन्थप्रणेतुः श्रीनृसिंहाश्रमिणस्सकाशादस्य दीक्षितेन्द्रस्य वेदान्तविद्याधिगम इति प्रवादोऽप्युपपद्यत इति॥

## पण्डितराजस्य जगन्नाथस्य अप्पय्यदीक्षितेन्द्रकालिकत्ववादः, तद्विमर्शश्च.

अत्र केचिद्दीक्षितेन्द्रस्यास्य समये पण्डितराजो जगन्नाथ आसीदित्य-भिदधते। तत्समर्थनार्थमेतत्पुरावृत्तं च प्रमाणयन्ति। यथा—दीक्षितेन्द्रोऽयं कदाचित्काश्यां भागीरथीनद्यामनुष्ठितप्रातराह्निककृत्यस्तत्परिसरे शीति-काभीत्या कम्बलेन मुखमप्याच्छाद्य प्रसुप्तं कमपि पुरुषमवलोकयन्—

किं निश्शङ्कं शेषे शेषे वयसि त्वमागते मृत्यौ।

इत्युदीरयामास। समाकर्ण्य चैतद्दीक्षितेन्द्रवाणीमपावृत्य मुखावरणं दीक्षितेन्द्रं पश्यति तस्मिन् पुरुषे तदाऽयं दीक्षितेन्द्रस्तमात्मनोऽजय्यं पण्डितराजं जगन्नाथं ज्ञात्वा—

अथवा सुखं शयीथा निकटे जागर्ति जाह्नवी भवतः।

इति श्लोकमापूरयामासेति॥

अत्रेदं कौतुकाद्विमृश्यते—अनुपदनिर्दिष्टं 'किं निश्शङ्कं' इत्यादिपद्यं दीक्षितेन्द्रीयमित्यत्र किमपि प्रमाणं नोपलभामहे। न दृश्यते च क्वापि तदीयेषु प्रबन्धेषु। प्रत्युत पण्डितराजजगन्नाथप्रणीत एव भामिनीविलासाख्यग्रन्थे तुरीयशान्तविलासप्रकरणान्ते पद्यमिदमुपलभ्यते। दीक्षितेन्द्रीयमेवैतत्पद्यं जगन्नाथेन तत्रोपात्तमिति तु न वक्तुं शक्यम्। यतस्तद्ग्रन्थान्ते तेनैव जगन्नाथेन—

दुर्वृत्ता जारजन्मानो हरिष्यन्तीति शङ्कया।
मदीयपद्यरत्नानां मञ्जूषैषा कृता मया॥

इत्यनेन तत्र स्वग्रन्थे स्वीयपद्यसंग्रहस्यैव सुस्पष्टमेवाभिधानात्। इत्थमेवान्यत्रापि स्वग्रन्थे परकीयपद्यानुदाहरणमेव प्रतिजानानेन तेनैव जगन्नाथेन—

निर्माय नूतनमुदाहरणानुरूपं
काव्यं मयाऽत्र निहितं न परस्य किञ्चित्।
किं सेव्यते सुमनसां मनसाऽपि गन्धः
कस्तूरिकाजननशक्तिमता मृगेण॥

इति रसगङ्गाधरे सप्रौढिप्रकाशनमभ्यधायि। तथा च 'किं निश्शङ्कं' इत्यादिपद्यस्याप्यय्यदीक्षितेन्द्रीयत्वकथनं निर्मूलमेवेति तद्बलाज्जगन्नाथस्य दीक्षितेन्द्रकालिकत्वकथनमनादरणीयम्॥

अत्रायमप्यपरोऽन्यैरङ्गीकृतो जगन्नाथस्य दीक्षितेन्द्रकालिकत्वसमर्थनप्रकारः। यथा--पुरा किल शेषकृष्णाह्वयसुधीमणेस्सकाशादधिगतव्याकरणशास्त्रो वैयाकरणसिद्धान्तकौमुदी-शब्दकौस्तुभ-प्रौढमनोरमादिव्याकरणप्रबन्धप्रणेता भट्टोजिदीक्षितनामा औत्तराहस्सुधीमणिरस्माद्दीक्षितेन्द्रादधिगताद्वैतवेदान्तः काश्यां निवसति स्म। तदात्व एव व्याकरणालङ्कारादिशास्त्रपारदृश्वा जगन्नाथाह्वयः पण्डितवरो यवनप्रभुणा डिल्लीश्वरेण पण्डितराजविरुदसंमानितस्तत्सभायां पण्डितप्रकाण्डो बभूव। स चायं जगन्नाथः कदाचिद्राजसभायां समागतां कांचन यवनकन्यकामुपवर्णयेति राज्ञा समादिष्टः—

इयं सुस्तनी मस्तकन्यस्तकुम्भा
कुसुम्भारुणं चारुचेलं वसाना।
समस्तस्य लोकस्य चेतःप्रवृत्तिं
गृहीत्वा घटे न्यस्य यान्तीव याति॥

इत्युपवर्णयामास। तदिदं चारुतरोल्लेखपरिकर्मितं पद्यमाकर्ण्य परितुष्टेन

तदभिलषितपरिपूरणोत्सुकचेतसा तेन राज्ञा स्वाभिलषितं परिपृष्टोऽयं जगन्नाथसुधीः—

न याचे गजालिं न वा वाजिराजिं
न वित्तेषु चित्तं मदीयं कदाचित्।
इयं सुस्तनी मस्तकन्यस्तकुम्भा
लवङ्गी कुरङ्गीदृगङ्गीकरोतु॥

इति पद्येनात्मनोऽभिलाषातिशयं प्रकाशयामास। तदानीं च स यवनप्रभुः अयि भोः पण्डितराज जगन्नाथ, किमेतदधिगतसकलशास्त्रो भवान् विप्रवर्यो नाकलोकार्गलां यवनकुमारीं कामयत इत्यनुयुक्तो जगन्नाथसुधीः पुनरपि—

यवनी नवनीतकोमलाङ्गी
शयनीयं यदि नीयते कदाचित्।
अवनीतलमेव साधु मन्ये
न वनी माघवनी विनोदहेतुः॥

इति श्लोकेनैवात्मनो मनोरथभूमानमाविश्चकार। ततः परितुष्टस्स राजा तदीयेच्छामनुरुध्यैव तं जगन्नाथं तयैव यवनकन्ययोद्वाहयामास। असान्निमित्ताद्भट्टोजिदीक्षितसुधीर्बहुभिः पण्डितमणिभिस्सहितस्तं जगन्नाथं सुबहु विनिन्दन् विप्रमण्डलाद्बहिश्चकार। ततोऽयं जगन्नाथसुधीरस्मिन् भट्टोजिदीक्षिते एतदनुषङ्गादेतद्गुरावस्मिन्नप्पय्यदीक्षितेन्द्रे चामर्षभारं वहन् भट्टोजिदीक्षितप्रणीतां प्रौढमनोरमां मनोरमाकुचमर्दिनीनाम्ना स्वग्रन्थेन निराचकार। तथा दीक्षितेन्द्रीयचित्रमीमांसाकुवलयानन्दौ च चित्रमीमांसाखण्डनरसगङ्गाधराख्याभ्यां ग्रन्थाभ्यां खण्डयामास। अतोऽयं जगन्नाथसुधीरप्पय्यदीक्षितेन्द्रकालिक इति॥

इदमपि विमर्शकानामादरणसरणिं कथमधिरोहेदिति वयं संचिन्तयामः। तथा हि—स्वप्रणीतानां मुक्तकपद्यानामपि परापहारशङ्कया कुत्रापि स्वग्रन्थे संयोजयितुकामस्य जगन्नाथसुधीन्द्रस्य प्रबन्धेषु कुत्राप्यनुपदनिर्दिष्टेषु पद्येषु कस्यचिदप्यनुपलम्भादश्रद्धेयमेतदित्येव मन्यामहे। जगन्नाथेन भट्टोजिदीक्षिताप्पय्यदीक्षितेन्द्रग्रन्थखण्डने च तत्प्रद्वेष एव निमित्तं, न त्वेतदीयप्रज्ञाप्रकर्ष इति, तथा दीक्षितेन्द्रकाल एव तदीयग्रन्थखण्डनं कृतमित्याद्युक्तौ च प्रमाणमन्वेष्टव्यम्। किंच भामिनीविलासान्त एव—

'शास्त्राण्याकलितानि नित्यविधयस्सर्वेऽपि संभाविताः'

इत्यादिना आत्मनः परिचितसकलशास्त्रत्वं संभावितसदाचारत्वं चोत्कीर्तयतो जगन्नाथसुधीन्द्रस्यात्यन्ताननुगुणे यवनीपरिणये मतिर्वा कथं स्यादित्येतस्य यवनकुमारीपरिणयनं न वयं संमन्यामहे। परं त्वयं पण्डितराजो जगन्नाथः पाजहान्-असफ्खान्-दाराशाहादियवनप्रभुभिस्संमानितस्तत्सभायां पण्डितोत्तमपदवीमलंचकारेत्यत्र न कस्यापि संशयलेशः। अत एव दिल्लीश्वरप्रदत्ताभिलषितपरितुष्टान्तरङ्ग एव जगन्नाथसुधी.—

दिल्लीश्वरो वा जगदीश्वरो वा मनोरथान् पूरयितुं समर्थः।
अन्यैर्नृपालैः परिदीयमानं शाकाय वा स्याल्लवणाय वा स्यात्॥

इत्यादिना दिल्लेश्वरौदार्यमुपवर्णयन्नात्मनः कृतज्ञतामाविश्चकारेति प्रगदः जगदाभरणासफविलासादिषु एतत्प्रणीतमासफ्खान्दाराशाहादियवनप्रभुवर्णनादिकं चोपपद्यते। न तावता दीक्षितेन्द्रकालिकत्वं त्वस्य वक्तुं शक्यते। यतोऽनेन हि जगन्नाथेनात्मनो नूत्नं वयो दिल्लीवल्लभसामीप्येऽतिवाहितमिति भामिनीविलासान्ते—

'दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः'

इत्युक्तम्। अत्र निर्दिष्टो दिल्लीवल्लभो बाबर्संततिजातः पाजहानाह्वयः। बाबर् समयस्तु A D. 1530 तमक्रैस्ताब्दपर्यन्तः। बाबर्सुतस्य हुमायूनाह्वयस्य समयः A. D. 1555 तमक्रैस्ताब्दपर्यन्तः। हुमायून्सुतस्याकबराह्वयस्य समयः A. D. 1605 तमक्रैस्ताब्दपर्यन्तः। अक्बर्सुतस्य सेलिमापराह्वयस्य जिहांगीरस्समयः A D 1627 तमक्रैस्ताब्दपर्यन्तः। जिहांगीराह्वयस्य महिषी नूर्जिहानाख्या, तस्याश्च भ्राता आसफ्खानाह्वयः। स च राजवाल्लभ्यात्सुप्रतीत आसीत्। अत एव तमधिकृत्य पण्डितराजेन जगन्नाथेन आसफ्विलासाख्यो ग्रन्थः प्रणीतः। जिहांगीरात्मजप्पाजहानाह्वयो यवनप्रभु. पण्डितराजजगन्नाथस्य प्रधानाश्रयभूतः। पाजहानाह्वयस्य तस्य यवनप्रभोः दाराशाहः—षूज.—औरंगजेब्—मुरादश्चेति पुत्राश्चत्वार आसन्। एतेष्वग्रिमस्य दाराशाहस्य संस्कृतपाण्डित्यमासीदिति किंवदन्ती। जगन्नाथाश्रयभूतानां पाजहानासफ्खान्दाराशाहादीनां समयः (A. D 1628–1658) अष्टाविंशत्यधिकषोडशशततमक्रैस्ताब्दप्रभृत्यष्टपञ्चाशदधिकषोडशशततमक्रैस्ताब्दपर्यन्त इत्यैतिहासिकास्संगिरन्ते। ततश्च पाजहान्सभायामात्मनः शैशवातिवाहनोक्त्या जगन्नाथसुधीन्द्रजन्मसमयः (A D. 1630) त्रिंशदधिकषोडशशततमक्रैस्ताब्दसंनिहितः स्यादित्यभ्यूह्यते। दीक्षितेन्द्राणां निर्याणसमयस्तु (A D 1626) षड्विंशत्यधिकषोडशशततमः क्रैस्ताब्द इति वक्ष्यते। इत्थं च

दीक्षितेन्द्रनिर्याणानन्तरकालिक एव जगन्नाथसुधीरिति तस्य दीक्षितेन्द्र-कालिकत्ववचनं दुर्निर्वहमेव ॥

किं च दीक्षितेन्द्रजीवनसमय एव तदीयग्रन्थखण्डनं जगन्नाथेन कृतं चेत्तदा आलंकारिकमूर्धन्येन सकलदर्शननिष्णातेन च दीक्षितेन्द्रेण तत्खण्डनमपरिशीलयता स्वग्रन्थदूषणं चाभ्युपगच्छता तूष्णींभाव एवाश्रित इति निगदितुं कस्य वा सचेतनस्य विपश्चितो रसना प्रवर्तेत। तस्मान्न दीक्षितेन्द्रकालिकता पण्डितराजस्य जगन्नाथसुधीन्द्रस्येति युक्तमुत्पश्याम इत्यलं प्रसक्तानुप्रसक्तयेति विरम्यते ॥

## अप्पय्यदीक्षितेन्द्रविरचितप्रबन्धसंग्रहः.

इत्थमसाधारणनानादर्शनदीप्तनिजशेमुषीप्रकर्षपरिमण्डितेनानेन दीक्षितेन्द्रेण श्रीवरदराजस्तव-श्रीकृष्णध्यानपद्धत्यादयः श्रीविष्णुस्तुति-ग्रन्थाः, श्रीवेदान्ताचार्यप्रणीतयादवाभ्युदयकाव्यव्याख्या, कुवलयानन्द-चित्रमीमांसा-वृत्तिवार्तिकादयोऽलंकारशास्त्रप्रबन्धाः, नक्षत्रवादावल्यादयो व्याकरणशास्त्रग्रन्थाः, विधिरसायनोपक्रमपराक्रमवादनक्षत्रावल्यादयः पूर्वमीमांसाशास्त्रग्रन्थाः, विशिष्टाद्वैतवेदान्तद्वैतसिद्धान्तानुरोधिनौ नयमयूखमालिका-न्यायमुक्तावल्याख्यौ निबन्धौ, वेदान्तवादनक्षत्रावली-सिद्धान्तलेशसंग्रह-कल्पतरुपरिमल-न्यायरक्षामण्यादयोऽद्वैतसिद्धान्तग्रन्थाः, शिवार्कमणिदीपिकादयः शैवसिद्धान्तग्रन्थाः, शिखरिणीमाला-ब्रह्मतर्कस्तव-शिवकर्णामृतादयः शिवोत्कर्षस्थापकसगुणशिवस्तुति पूजाविध्यादिप्रकारप्रपञ्चनपराश्च बहवः प्रबन्धाः प्राबन्धिषत ॥

## अप्पय्यदीक्षितेन्द्रपुत्राः.

सोऽयं दीक्षितेन्द्रो निजोदीरितवाणीसत्यापनाय स्वाभ्यर्चितदेवीप्रदत्तगगनोत्क्षिप्तताटङ्करत्नप्रभोद्भावितसंपूर्णचन्द्रिकाप्रसारणात् कुहूमपि पौर्णमासीकरणेन परितुष्टाच्चन्द्रशेखराह्वयभूपालादवाप्तरत्नमयखेटाभरणवत्तया रत्नखेटदीक्षित इति सुप्रतीतस्य तूप्पुल्ग्रामाभिजनस्य श्रीनिवासाध्वरिणः कुमारीं मङ्गलनायिकामुदुह्य तस्यां शङ्कराद्यानेकादश पुत्रान् लेभ इति शिवानन्दप्रणीताप्पय्यदीक्षितचरितचम्पूप्रबन्धादवसीयते। तेऽप्येतत्पुत्राः स्वपितृवद्विद्यापारंगता विनयान्विताः कवितावैभवसमन्विताश्चासन्निति विज्ञायते। श्रूयते किल तत्रेयं काचन

किंवदन्ती। यथा—कदाचिदेतद्दीक्षितेन्द्रस्य तनयेष्वेकेन कांचिदङ्गनां रहसि मनसि कलयता—

अकृशं कुचयोः कृशं विलग्ने
विपुलं वक्षसि विस्तृतं नितम्बे।
अधरेऽरुणमाविरस्तु चित्ते

इति पद्यलेखनसमये तत्तुर्यपादलेखनसमयात्पूर्वमतर्कितोपनते सत्यस्मिन् दीक्षितेन्द्रे तेन पुत्रेणैतस्य सर्वस्य भवानीवर्णनपरताप्रकाशनाय झटिति 'करुणाशालिकपालिभागधेयम्' इति तत्तुर्यपादलेखनेन तत्पद्यमापूरित-मिति। तदिदं पद्यं दीक्षितेन्द्रैरेव स्वीये कुवलयानन्दे उदाहृतं चोपलभ्यते॥

## अप्पय्यदीक्षितेन्द्रनिर्याणकालः.

एवमयं दीक्षितेन्द्रो निरुपमप्रतिभाप्रकर्षपरिमण्डितः परश्शतप्रबन्ध-निर्माणेन चतुरधिकशतप्रबन्धनिर्वाहकाचार्येत्यादिविरुदपरिकर्मितोऽ-न्यूनां द्वासप्ततिं वत्सरान् महीमण्डलमेतन्मण्डयामासेति—

द्वासप्ततिं प्राप्य समाः प्रबन्धान् शतं व्यधादप्पयदीक्षितेन्द्रः।

इत्येतद्दीक्षितेन्द्रावरजचारुदीक्षितपौत्रनीलकण्ठदीक्षितप्रणीतशिवलीला-र्णवोक्तथा,

नीत्वा द्विसप्तत्यधिकास्समाश्च कैलासयात्रां स चिकीर्षुरन्ते।

इति शिवानन्दीयपरिदृश्यमानोक्तया चावसीयते॥

तथा दीक्षितेन्द्रस्यास्य निर्याणसमये एतदाशयं विज्ञातुकामैरेत-दात्मजैः प्रार्थितेनानेन दीक्षितेन्द्रेण—

चिदम्बरमिदं पुरं प्रथितमेव पुण्यस्थलं
सुताश्च विनयोज्ज्वलाः सुकृतयश्च काश्चित्कृताः।
वयांसि मम सप्ततेरुपरि नैव भोगे स्पृहा
न किंचिदहमर्थये शिवपदं दिदृक्षे परम्॥

इत्युदीरणसमनन्तरं—

आभाति हाटकसभानटपादपद्म-
ज्योतिर्मयो मनसि नस्तरुणारुणोऽयम्।

इति तादात्विकस्वान्तरङ्गभासमाननटराजमनुसंदधतैव निर्याणे सति तदा तदात्मजैः—

नूनं जरामरणघोरपिशाचकीर्णा
संसारमोहजननी विरतिं प्रयाता॥

